# श्रीबुद्धिसागरः

पण्यं ०—३—०

प्राप्तिस्थानम्,
श्री जैन आनंद पुस्तकालय
गोपीपुरा, सुरत.

श्रीरत्नसिंहाचार्यचरणचंचरीकश्रीउदयवल्लभचरणसेवकसंग्रामसोनीसंदब्धः



# श्रीबुद्धिसागरः

धर्मनयव्यवहारप्रकीर्णकाख्यतरंगचतुष्कमयः

मुद्रयित्री–जामनगरवास्तव्यश्रेष्ठिपोपटभाइबृहद्भ्रातृश्रीलक्ष्मीचन्द्रात्मजश्रेष्ठिचुनीलालविहितार्थसाहाय्येन
मालवान्तर्गतरत्नपुरीयश्रीऋषभदेवजीकेशरीमलजीश्वेतांवरसंस्था ।

मुद्रणस्थानम्–श्रीफकीरचन्द मगनलाल बदामी इत्यनेन स्वकीये 'श्रीजैनविजयानन्द' प्रीन्टींग प्रेस
(कणपीठबजार, सुरत.) इति यन्त्रालये मुद्रितः

प्रतयः ५०० वीरसंवत् २४६३ विक्रमसंवत् १९९३ क्राइष्टसन् १९३६ (सर्वेऽधिकाराः स्वायत्ताः) पण्यं ०-३-०

# श्रीसंग्रामसोनीविहितस्य बुद्धिसागरस्योपक्रमः

ग्रन्थोऽयं यथार्थाभिधानो बुद्धिसागरो विपश्चितामुपदाक्रियमाणः गृह्यतां करकुशेशये कोविदैः। विषयः–अस्मिन् हि ग्रन्थरत्ने श्रीमद्भिः संग्रामसिंहैः प्रकरणापराभिधानास्तरंगा निवेशिताश्चत्वारः, ते च क्रमेण धर्मनयव्यवहारप्रकीर्णकाख्याः, यद्यपि लघुतमोऽयं ग्रन्थस्तथापि चाणक्यकामन्दक्यादिनीतिशास्त्राणामिव शिशूनां व्यवहारपरायणानां चातीव उपयुक्त इति मुद्रणमस्यादृतं संस्थयाऽनया, यथायथं लोकोपयोगिनः सर्वेऽपि विषया अस्मिन् निवेशिता इति ग्रन्थः पाठोपयुक्तोऽयं, कर्त्ता चास्यालावद्दीनसत्कसांगणान्वयी श्रीनरदेवतनूजः संग्रामसिंहो मालवाधिपमहमूदभाण्डागारिको येन श्रीमक्षीपार्श्वचैत्यं समुद्दध्रे, कृतिश्चास्य निजामजययात्रायां प्रतिष्ठानपुरे इति स्पष्टं प्रशस्तावस्य। १९९३ वैशाख शुक्ला १३ निवेदका आनन्दसागराः

# सोनीसंग्रामसिंहभाण्डागारिककृतस्य बुद्धिसागरस्य विषयानुक्रमः

अर्हं नमः श्रीवीतरागाय।

मंडपदुर्गवास्तव्यभाण्डागारिकश्रीसंग्रामसिंहविहितो

# बुद्धिसागरः (सद्धर्मादिनिरूपकः)

॥ ऍं नमः ॥ नमः श्रीवीतरागाय, मोहध्वान्तैकभानवे। नमज्जनघनानन्दकारिणे विश्वधारिणे ॥१॥ सर्वकल्याणरूपाय, सम्पत्सिद्धिप्रदायिने। विघ्नव्रजविनाशाय, गौतमस्वामिने नमः ॥२॥ येषां प्रसादतः प्राप्ता, बुद्धिर्विश्वोपकारिणी। प्रारिप्सितार्थसिद्ध्यर्थं, गुरुभ्यः सर्वदा नमः ॥ ३ ॥

श्रीरत्नसिंहसूरेः पट्टालङ्करणमद्भुतगुणाढ्यम्। गुरुमुदयवल्लभाख्यं सूरिं वन्दामहे सततम् ॥४॥ उद्यत्प्रतापदिनकरकिरणैर्निर्धूतवैरितिमिरौघः। खल्वाकुलाब्धिचन्द्रः, स जयति महमूदभूमीन्द्रः ॥५॥ तस्य च मालवदेशे मण्डपदुर्गेऽत्र भाति सुविनीतः। सङ्ग्रामसिंहनामा भाण्डागाराधिकारीन्द्रः ॥६॥ गौतमस्वामिनः प्राप्तवरो भक्त्याऽतिसादरः। बुद्ध्याऽभयकुमारोऽयं, वाग्वादिन्याः प्रसादतः ॥ ७ ॥ ओसवाले कुले श्रीमान्नररेवस्य नन्दनः। निर्मलार्थगभीराणि, शास्त्राण्यालोच्य तत्त्वतः ॥८॥ सारमुद्धृत्य तेभ्यस्तु, निजबुद्ध्याऽतिशुद्धया। बुद्धिसागरनामेति, सर्वदर्शनसम्मतम् ॥९॥ सङ्ग्रामो रचयत्येतच्छास्त्रं विश्वोपकारकम्। गंभी-

रमनतिक्रम्यमधीरैर्मन्दबुद्धिभिः॥१०॥ सुवृत्तरत्ननिचयैः, पूर्णं लक्ष्मीनिकेतनम्। उद्यद्विवेकपूर्णेन्दुकलासनसुशोभितम् ॥११॥ सद्धर्मनयशुद्धार्थव्यवहारप्रकीर्णकैः। तरङ्गनामभिर्युक्तं, चतुर्भिर्धीवरप्रियम् ॥१२॥ पड्भिः कुलकम् ॥

भूयात् सदर्थसम्पत्तिव्यवहारविवेकवत्। विश्वं मदुपकृत्यै च, युगपत्श्रीसमन्वितम् ॥१३॥ चिन्तयन्निति सङ्क्रामो, जगज्जनहिते रतः। शास्त्रकर्तृच्छलेनैव, विश्वोपकरणव्रतम् ॥१४॥ स्वयमङ्गीकृतं पूर्णं,प्रकारोत्पथनाशनम्। स्थापकः सर्वधर्माणां,जिनधर्मधुरन्धरः ॥१५॥ त्रिभिर्विशेषकम् ॥ नातिविस्तारमत्यन्तहितार्थशतसङ्कुलम्। प्रसन्नार्थमतः शास्त्रं, मान्यमेतन्मनीषिभिः ॥१६॥ ये चोपहासनिरताः, सदा दोषैकदृष्टयः। कृतोऽयमञ्जलिस्तेभ्यः, क्षमध्वं चापलं मम ॥१७॥ धर्मान्नयप्रवृत्तिः स्यान्नयात् सद्व्यवहारधीः। व्यवहारात् प्रसीदन्ति, प्रकीर्णार्थाः सुनिश्चिताः ॥१८॥ अत्रोऽत्र धर्ममूलत्वान्नयादित्रितयस्य तु। धर्मशुद्धितरङ्गोऽयमाद्यः प्रारभ्यतेऽधुना ॥१९॥

**अथ धर्मप्रशंसा॥** धर्माद्राज्यं यशो लक्ष्मीः, पुत्राः कायस्त्वनामयः। तपस्यभिरतिश्चापि, केवलज्ञानमुत्तमम् ॥२०॥ तपो ज्ञानं तथा दानं, तीर्थं स्वाध्याय एव च। शमो जीवदया चेति, धर्ममूलानि संविदुः ॥२१॥ तपोदानादिसिद्धिस्तु, बह्वायासव्ययैर्भवेत्। अयत्नसाध्याऽतिफला, दया तेषु प्रशस्यते ॥२२॥ परमात्मा हि सर्वज्ञो, यः साक्षी जीवकर्म्मणाम्। जीवानां पालनात्राणात्, परितुष्टो भवेत् स हि ॥२३॥ यो द्वेष्टि मनुजो मोहात्, कृमिकीटपशूनपि। स्वात्मद्वेषः कृतस्तेन, ध्रुवं निरयपातनात् ॥२४॥ दयाधर्मं परित्यज्य, योऽन्यधर्मान्निषेवते। वृथा श्रमं स कुरुते, कृषिं पर्वतभूमिषु ॥२५॥ आत्मवत् प्राणिनः सर्वान्, पश्यन् कृच्छ्राद् विमोचयेत्। स्वशक्त्या मनुजः सोऽग्रगण्यः पुण्यवतां भवेत् ॥२६॥

अथ सत्यम्–तपो दानं यशः शौचं, विद्या च श्रुतशालिनी। आचारः शाश्वतो धर्मः, सदा सत्ये व्यवस्थितः ॥२७॥ महाभूतानि चन्द्रार्कौ, धीह्रीश्रीकान्तिकीर्त्तयः। सत्यस्य वशगाश्चैते, तस्मात् सत्यं सदा वदेत् ॥२८॥ धर्मार्थव्यवहारेषु, भये हास्यकथास्वपि। रते कान्ताजनैर्वाऽपि, न वदेदनृतं क्वचित् ॥२९॥ एतत् सत्यव्रतं नाम, सङ्ग्रामः सत्यसङ्गरः। दिशत्यखिललोकस्य, हितायामृतसन्निभम् ॥३०॥ सत्या सुसंस्कृता वाणी, वक्तृश्रोत्रोश्च मध्यगा। पुनाति परितः सर्वं, गङ्गेवोभयकूलभाक् ॥ ३१ ॥ नास्ति सत्यात् परा भूपा, नास्ति सत्यात् परं यशः। नास्ति सत्यात् परं वित्तं, तस्मात् सत्यं न संत्यजेत् ॥३२॥ कन्याप्रदाने शपथे, साक्षिवादे सभासु च। असत्यं प्रवदन् मोहाज्जीवन्निरायमश्नुते ॥ ३३ ॥

अथ परद्रव्यपरिहारः॥ अज्ञानादथवा लोभात्, परिहासाच्छलादपि। परद्रव्यापहरणं, न कार्यमतिगर्हितम्॥३४॥ मार्गे यत् पतितं दृष्टं, तथैवान्येन विस्मृतम्। निक्षेपस्थापितं चापि, चौरैरपहृतं च यत्॥३५॥ सुवर्णं रौप्यमन्नं वा, धातुभाण्डं तथा धनम्। परकीयं तृणाद्यन्यत्, करेणापि न संस्पृशेत्॥३६॥ युग्मं। करनासापदच्छेदं, ताडनं शीर्षकर्त्तनम्। प्राप्नुवन्त्यशुभं चौरास्तस्माच्चौर्यं परित्यजेत्।३७।

अथ परस्त्रीपरिहरणम्–अधर्म्ममूलं वैरस्य, निदानं कलहास्पदम्। अयशोभाजनं धर्मतरोस्तीक्ष्णकुठारकम् ॥३८॥ इह निन्दाकरं प्रेत्यमहारौरवदायकम्। मनसाऽपि न कुर्वीत, परस्त्रीगमनं बुधः ॥३९॥ युग्मम् ॥ साभिलाषं परस्त्रीणामालोके सम्भवन्ति हि। यावन्तो निमिषाः कल्पांस्तावतो नरके वसेत् ॥४०॥ महान्तोऽपि विनश्यन्ति, परस्त्रीसङ्गलोलुपाः। महदैश्वर्ययुक्ता हि, विनष्टा रावणादयः ॥४१॥ स पण्डितः स गुणवान्, सतां पूज्यः स एव हि। अहो जगज्जितं तेन, यः परस्त्रीपराङ्मुखः ॥४२॥

अथ परिग्रहः॥ गृहव्यापारनिरतैः, परलोकहितेप्सुभिः। जीवद्रोहो भवेद्येन, न स कार्य्यः परिग्रहः ॥४३॥ चित्तं नैकान्तता-

मेति, यस्माद्भूरिपरिग्रहैः। चतुर्वर्ग्गफलं नृणां, चले चित्ते न सिद्ध्यति ॥४४॥ बहुलाभेऽपि तृष्णायाः, समाप्तिर्नैव दृश्यते। अतस्तां संपरित्यज्य, भवेत् सन्तोषवान् सुखी ॥४५॥

अथ गृही ॥ देवतातिथिभक्तश्च, दीनानाथानुकम्पकः। स्वदारनिरतश्चापि, गृही स्याच्च दयापरः ॥४६॥ गुरुदेवार्चनं दानं, पठनं संयमस्तपः। षट् कर्माणि प्रकुर्वाणो, गृही मुच्येत बन्धनात् ॥४७॥ शुचिर्धौताम्बरधरो, गन्धमाल्यफलाक्षतैः। दीपनीराजनैर्धूपनैवेद्यैर्देवमर्चयेत् ॥४८॥ नास्तिक्यलोभादियुतो, निन्दकश्चानुसूचकः। दम्भाद्धर्म्माभिधानी च, गृही पापैकभाजनम् ॥४९॥

अथ ब्रह्मचारी ॥ गुरुशुश्रूषको नित्यमाज्ञापालनतत्परः। भवेत् पठनशीलश्च, ब्रह्मचारी स सत्यवाक् ॥५०॥ शरीरसंस्कारपरो, नृत्यगीतादिसादरः। स्रगादिलोलुपश्चापि, ब्रह्मचारी विनश्यति ॥५१॥

अथ यती–विनिर्जितेन्द्रियग्रामः, सर्वजीवदयापरः। सर्वशास्त्रार्थदर्शी च, भिक्षुर्मोक्षपदं व्रजेत् ॥५२॥ सर्वसङ्गविनिर्मुक्तो, यती धनपरायणः। बकवृत्तिः स विज्ञेयश्चण्डपाखण्डदण्डभृत् ॥५३॥ आहारशुद्धिरहितो, विरुद्धाचरणस्तु यः। मुक्तिं वाञ्छति मूढात्मा, यतिधर्मं विडम्बयेत् ॥ ५४ ॥

अथ साधारणान् धर्मान्नरदेवस्य नन्दनः। सङ्ग्रामो वदति श्रेष्ठान्, स्वयमाचरितान् शुभान् ॥५५॥ दुर्लभं मानुषं प्राप्य, नयति व्यसनैस्तु यः। पर्वतोपलबुद्ध्याऽसौ, चिन्तारत्नं परित्यजेत् ॥५६॥ सम्पत्कुलबलैश्वर्यसुरूपत्वश्रुतादिषु। प्रकुर्वन् गर्वमचिराल्लघुतां याति मानवः ॥ ५७ ॥

अथेन्द्रियाणि ॥ जेतव्यानीन्द्रियाण्यादौ, नरेण नियतात्मना। उपेक्षितानि तान्याशु, विघ्नंति व्याधिवत् सदा ॥५८॥ मृगो

मीनः करी भृङ्गः, पतङ्गः पञ्च जातयः । शब्दादिलौल्यभावेन, पञ्चत्वं यान्त्यशङ्किताः ॥५९॥ एकैकमप्यनर्थाय, महते महतामपि। पञ्चापि यस्य बलवन्त्यसौ न क्षणमाश्वसेत् ॥६०॥

अथ गुरुः–स्वधर्माचारनिरतः, शास्त्रवेत्ताऽर्थतत्त्ववित् । निर्णेता धर्मवाक्यानामक्रोधी विजितेन्द्रियः ॥६१॥ लोभमोहविहीनश्च, शिष्यवर्गकृपाकरः। स्पष्टार्थवक्ता सद्धर्मोपदेष्टा गुरुरुच्यते ॥ ६२ ॥

अथोपासकः–अक्षुद्रः सुन्दरः पापभीरुर्लज्जादयान्वितः । निर्गुणेषु च मध्यस्थो, रागी परगुणेष्वपि ॥६३॥ कथकः पक्षयुक्तश्च, दीर्घदर्शी च सौम्यदृक् । वर्धिष्णुः सत्यवादी च, विशेषज्ञो विवेकवित् ॥६४॥ उपकारी विनयवान्, धोरः क्रोधविवर्जितः। गम्भीरश्चैकावशत्या, गुणानामनया युतः॥६५॥ धर्मोपदेशपात्रं स्याद्, भाग्यवानीदृशो नरः । परीक्ष्य विधिवद्धर्मो, वाच्यस्तस्मै विपश्चिता ६६।

अथ शिष्यः–राजवंश्योऽधिकारी वा, व्यवसायी विदेशगः। निर्धनत्वान्धकूपात्तु,समुद्धार्यः सदैव हि ॥६७॥ कस्यचित् प्रार्थनाभङ्गो, नैव कार्यः स्वशक्तितः । मदनज्वरतप्ताङ्गीं, परनारीं विनाऽनिशम् ॥६८॥ धनेनान्नेन वस्त्रेण, वचनेन प्रियेण वा । अतिथिः सर्वदा पूज्यः, सुशीतलजलेन वा ॥ ६९ ॥ अतिथिर्विमुखो याति, गृहात्तु गृहमेधिनः । तस्य तद्दिनजं पुण्यं, गृहीत्वैव प्रयात्यसौ ॥७०॥ शुकपारापतश्येनमार्जारशुनकानपि । वन्यानथ मृगादींश्च, क्रीडार्थं नैव पालयेत् ॥७१॥ सा क्रीडा नैव कर्त्तव्या, जीवद्रोहो भवेद्यया। निन्दितः पापहेतुत्वाज्जीवद्रोहः स्वकामतः ॥७२॥ दया धर्मतरोर्मूलं, क्षमा विज्ञानशाखिनः। गुणानां विनयो मूलं, नाशमूलं सगर्वता ॥७३॥ दुराचारपरो धृष्टः, पुण्यवन्तं विनिंदति । नूनं कलेः प्रभावोऽयं, विद्वान् मूर्खेण जीयते ॥७४॥

अथ मातापितरौ–श्रेयस्कारि मनोहारि, नित्यमानन्ददायि च । दुर्लभं मानुषे लोके, पित्रोः सन्दर्शनं महत् ॥७५॥ सर्वतीर्थ-

मातापितरौ

मयौ ज्ञेयौ, पितरौ पुण्यरूपिणौ । तयोराज्ञां विना पुत्रो, नैव तीर्थान्तरं व्रजेत् ॥७६॥ पितरौ चेदनादृत्य, मूर्खस्तीर्थपथं व्रजेत् । हस्ताच्चिन्तामणिं त्यक्त्वा, दूरस्थं काचमश्नुते ॥७७॥ यो न वेत्ति नरः कार्येष्वन्तरं पुण्यपाप्मनोः । चतुरः पण्डितंमन्योऽप्यसतामग्रणीस्तु सः ॥७८॥ जगदीशमहीपालगुरूणामपि सर्वदा । आज्ञाभङ्गं प्रकुर्वाणो, नरो भवति किल्बिषी ॥७९॥ व्यवहारेऽधिकारे वा, न कुर्यात् कौतुकेष्वपि । जटिलिङ्गिद्विजातीनां, कपाटोद्घाटनं सुधीः ॥८०॥ वृथा परापवादादिकथाभिः पिशुनैः समम् । धर्मस्य समयो नैवातिवाह्यः शुद्धबुद्धिना ॥८१॥ देवे गुरौ धर्मशास्त्रे, कपटं नाचरेद्बुधः । भाव्यं विशुद्धभावेन, तेष्वादरवता सदा ॥८२॥ तपस्विगुरुदेवार्षियोगिभिश्च समं क्वचित् । नैव वैरवता भाव्यं, नरेण शुभमिच्छता ॥ ८३ ॥ अनुरागश्च दयायामिन्द्रियवर्गस्य सन्ततं दमनम् । वाच्यं वचनं सत्यं त्वेतद्धर्मस्य हि रहस्यम् ॥८४॥ शीलं न खण्डनीयं न सन्निवासः समं कुशीलैश्च । गुरुवचनाद्यस्खलनं धर्मस्यायं हि परमार्थः ॥८५॥ (आर्ये)सुजन्म विमले कुले नृपतिसद्मसन्मान्यता, मुहुः प्रियसमागमोद्भवसुखं च लक्ष्मीः स्थिरा । शशाङ्कधवलं यशः सदसि वाक्पटुत्वं नृणां, दिशत्यनिशमर्जितः सुकृतकल्पवृक्षः फलम् ॥८६॥ गौराभाति च यस्य गौरवगुणैर्विश्वम्भरेवापरा, रत्नालङ्कृतिसोज्ज्वलाऽखिलपरस्त्रीसोदरस्य प्रिया । शृङ्गारादिरसेन कान्तसुभगा सङ्ग्रामसिंहस्य धीसिन्धौ धर्मतरङ्ग एष शुभदस्त्वाद्योऽनवद्योऽभवत् ॥८७॥ इति श्रीसङ्ग्रामसिंहविरचिते बुद्धिसागरे धर्मतरङ्गः प्रथमः १ ॥

जयति जगत्त्रयजननी देवी वाग्वादिनी जगद्वन्द्या । यत्सरणात्तरणौवैः कविता कमनीयतां याति ॥१॥ श्रीवीतरागपदपङ्कजचञ्चरीको, वाग्वादिनीचरणचिन्तनचित्तवृत्तिः । सङ्ग्रामनाम कविकल्पतरुः करोति, धीसागरं नयतरङ्गकरम्बितार्थम् ॥ २ ॥ युक्तं समौ सज्जनदुर्जनावुभौ, यतो भवेतां खलु पापहारिणौ । सन्दर्शनात् संसदि दोषवादतस्तच्चित्रमेको गतिमेति नापरः ॥ ३ ॥

सुवर्णालङ्कृता शुद्धा, स्वदेशीयकवेः कृतिः। सुवृत्ताऽपि गृहस्त्रीव, दुर्वृत्तेभ्यो न रोचते ॥४॥ अथ सङ्ग्रामसिंहोऽसौ, दुर्जनेऽपि दया-
परः। नृपोद्देशेन कुरुते, हितं सर्वजनेष्वपि ॥५॥ सङ्ग्रामोक्तोहितैर्येषां, न गता दुष्टचित्तता। तरणेः किरणैर्घूको, दिवाऽन्धः कस्य
दोषतः ? ॥६॥ धर्मेण राज्यलाभः स्याद्राज्यवृद्धिर्नयेन च। अतोऽत्र नयरत्नानां, पद्धतिं चतुरोचिताम् ॥ ७ ॥ नरदेवहितां रम्यां,
सङ्ग्रामैकजयप्रदाम्। विश्वोपकारिणीं शुद्धां, सङ्क्षेपाद्रचयत्यसौ ॥८॥ युग्मम् ॥ राजा राज्ञी कुमारश्च,मन्त्रिणश्चाधिकारिणः। प्रजे-
त्युक्तक्रमाणां च, विधेयमधुनोच्यते ॥९॥ अथ राजा–राजा वृद्धोपसेवी स्याद्दक्षो नात्युग्रदण्डकृत्। अदीनवचनः शूरो, धर्मी
षाड्गुण्यवित् सुधीः ॥१०॥ परीक्ष्यकारी सोत्साहो, रिपुरन्ध्रैकदृष्टिदः। वृद्धिव्ययविचारज्ञः, स्मरत्युपकृतं च यः ॥११॥ दृढप्रतिज्ञो
मेधावी, शक्तित्रयसमन्वितः। अकर्णदुर्बलो यायी,ह्यसन्तोषी रिपोर्जये ॥१२॥ सर्वव्यसननिर्मुक्तो, युद्धविद्यादिभिः सदा। विभक्त-
कालः सर्वत्र, सावधानः प्रियंवदः ॥१३॥ यत्नवानात्मरक्षासु, गूढमन्त्रः प्रतापवान्। सुगुप्तरागरोषश्च, भृत्येष्वननुसूचकः ॥ १४ ॥
चतुर्भिः कुलकम् ॥ यामे च पश्चिमे नित्यं, वेणुवीणादिजैः स्वनैः। गीतवाद्यैश्च विविधैः, प्रबुद्धः शयनं त्यजेत् ॥ १५ ॥ कृतदेह-
विशुद्धिश्च गतालस्यो जितेन्द्रियः। संस्मृत्य परमात्मानं, जगत्कर्त्तारमव्ययम् ॥१६॥ संसारसिन्धुतरणे, सेतुमव्यक्तरूपिणम्। इति
यश्चिन्तयेन्नित्यं, चरचारुविलोचनः ॥१७॥ अधिकारनियुक्तानां, मध्ये को हितकारकः ?। को दण्ड्यः ? कश्च पूजार्हः ?, प्रेषणी-
योऽस्ति कः क्वचित् ? ॥१८॥ कस्मिन् देशे च गन्तव्यं ?, कः शत्रुः ? किं बलं मम ?। कोशे राज्यतरोर्मूले, का वृद्धिः ? को व्ययो
दिने ? ॥१९॥ चतुर्भिः कुलकम् ॥ सुज्ञातं भक्षयेद्दन्तकाष्ठं प्रातरुदङ्मुखः। मुकुरादौ मुखं दृष्ट्वा, पञ्चाङ्गश्रवणं ततः ॥२०॥ पञ्चाङ्गं
प्रातरुत्थाय, यः शृणोति नराधिपः। दुर्दशा दुर्यशो नश्येत्तस्य दुःस्वप्नजं फलम् ॥ २१ ॥ प्राणाचार्यवचः कुर्यान्नित्यदानं वितीर्य

च। विनीतवेषाभरणस्ततो धर्मसभां विशेत् ॥२२॥ सुदृष्टिदानसन्मानैः, शुभसम्भाषणेन च। नियोगांश्चैव कार्येषु, सर्वान् सम्मा-
नयेत् क्रमात् ॥२३॥ स्वराष्ट्रे परराष्ट्रे च, मित्रे शत्रौ चरेष्वपि। मन्त्रिणाऽऽलोचयेत् सर्वं, कार्यजातं महीपतिः ॥ २४ ॥ परेङ्गितज्ञो
धीरश्च, मेधावी वाक्पटुस्तथा। प्राज्ञो यथोक्तवादी च, चरो दुर्लक्ष्यवेषवित् ॥ २५ ॥ क्रूरं स्तब्धमसन्तुष्टं, सालस्यं मुखरं शठम्।
अभक्तं तु त्यजेद् भृत्यं, पालयेत्तमनीदृशम् ॥२६॥ दुष्टदण्डः साधुपूजा, कोशवृद्धिर्नयेन च। अपक्षपातः सद्रक्षा, नृपाणां यज्ञप-
ञ्चकम् ॥२७॥ मृगयाद्यूतपानानि, गर्हितानि त्यजेन्नृपः। तेभ्यो विपदमापन्नाः, पाण्डुनैषधवृष्णयः ॥२८॥ अभ्यासः सर्वदा
कार्यः,सर्वविद्यासु पार्थिवैः। नृपः सर्वकलायुक्तः,शशाङ्क इव शोभते ॥२९॥ कामलोभादिभिर्लोको,रौरवे मज्जति ध्रुवम्। यथाऽपरा-
धदण्डेन, यदि राज्ञा न धार्यते ॥३०॥ प्राकारपरिखातोयधान्यदन्तितुरङ्गमैः। शूराप्तयन्त्रदैवज्ञैः, संगतं दुर्गमुच्यते ॥३१॥ चतु-
रङ्गे बले पूर्णे, यो न यायी स हीयते। स्वचक्रपोषणेनैव,क्षीणोऽसौ दुर्नयं भजेत् ॥३२॥ यस्य दुर्गं बलं तस्य,यस्य दुर्गं स दुर्जयः। यस्य
स्थानबलं सम्यक्, शुद्धपार्ष्णिः स उच्यते ॥३३॥ अशुद्धपार्ष्णिर्यो राजा,परराष्ट्रं प्रयाति चेत्। निश्चिन्तः सुखलोभेन, स वशं वैरि-
णां व्रजेत् ॥३४॥ सन्धिश्च विग्रहो यानं,द्विधामानं तथाऽऽसनम्। संशयश्चेति षाड्गुण्यं, नृपाणां विजयप्रदम् ॥३५॥ रात्रावुलूकवशगः,
काकस्तद्वशगो दिवा। घूकस्तद्वच्च कालज्ञो, बलाबलमुदीक्षयेत् ॥३६॥ हन्ति सिंहं जले नक्रः, स्थले नक्रं च केसरी। इति देशविभा-
गज्ञः, क्षितिपो दुर्जयं जयेत् ॥३७॥ शत्रोरुन्मूलनं कार्यं, विजितेनैव शत्रुणा। कण्टकेन करस्थेन, कण्टकोद्धरणं यथा ॥३८॥ इत्या-
चारविचारज्ञो, देशकालविभागवित्। निष्कण्टकं नृपो भुङ्क्ते, स पृथ्वीं सप्तसागरीम् ॥३९॥ लघूनपि च वर्द्धयन् कुसुमितान् विचि-
वन् शनैः, क्षिपन् कुटिलकण्टकान् बहिरसौ समुन्मूलितान्। दृढं समधिरोपयन् विरहयन्मिथःसंहतान्, भवेत् भुवनपालवत् कृत-

मतिः स्थिरो भूपतिः ॥ ४० ॥

अथ राज्ञी-कन्यां राजकुलोत्पन्नां, राजलक्षणलक्षिताम् । चारुशीलामहीनांगीं, यथाकालं समुद्वहेत् ॥४१॥ कुरूपाऽति सपत्नीषु, नित्यमीर्ष्यापरायणा । स्वभर्तृनिन्दका चैव, न सा योग्या नृपाङ्गना ॥४२॥ तुल्यसौन्दर्यगुणयोर्योग्यशीलवयस्कयोः । दम्पत्योरनयोर्जातः, कुमारो राज्यभाजनम् ॥ ४३ ॥

अथ कुमारः॥ राज्ञा बाल्येऽपि पुत्रस्य, शिक्षा कार्या प्रयत्नतः । सरसो नम्रतां याति, वंशोऽसौ नैव नीरसः ॥ ४४ ॥ पित्रा सुशिक्षितः पुत्रो, न दुष्टव्यसनी भवेत् । किं न बर्करवत् कुर्याद्राजपुत्रो निरर्गलः ॥४५॥ यस्तु राजकुमारोऽपि, परिवारपराङ्मुखः । दुष्टव्यसनसंसक्तो, न राज्यं प्राप्नुयात् क्वचित् ॥४६॥ कुमारत्वेऽपि यः स्वाज्ञां, प्रतापं जयपद्धतिम् । न लिखेत् स्वशरैर्वक्षस्यरातेः स न राज्यभाक् ॥४७॥ यौवराज्ये श्रुते यस्य, रिपोस्तत्पितृभूमिते । हृदये नोत्थितो वह्निः, कथमग्रे स राज्यभाक् ? ॥४८॥

अथ मन्त्रिणः-सङ्ग्रामे विजयः पुण्यं, राज्यवृद्धिर्यशो धनम् । दुरमात्ये विनश्यन्ति, सम्भवन्ति सुमन्त्रिणि ॥४९॥ दुरमात्योपदेशेन, कृते कार्ये स्वयं महत् । दुर्यशोभाजनं वह्निर्ग्रामदाहेन मारुतः ॥५०॥ अतो महीपतिर्दुष्टमकुलीनं स्ववंशजम् । अज्ञातशीलमहितं, दुराचारं च दुर्मुखम् ॥ ५१ ॥ मूर्खमन्यायकर्त्तारं, सदा लोभैकलोलुपम् । निर्दयं व्यसनासक्तं, नामात्यत्वे नियोजयेत् ॥५२॥ युग्मम् ॥ अनीतिज्ञः प्रधानादिपदाकाङ्क्षी दुराशयः । उच्चप्राप्ये फले नूनमुद्बाहुर्वामनो यथा ॥५३॥ शरीरासुखलोभेन, सेवालस्यं करोति यः । राजवल्लभतां याति, कथं स गुणवानपि ? ॥५४॥ मित्रभावेन यः कोऽपि, मन्त्रं पृच्छति सादरम् । तस्मै कूटोपदेष्टाऽसौ, शिरश्छेत्ताऽङ्कशायिनः ॥५५॥ राजमानं समासाद्य, परोपकरणं नरः । करोति निःस्पृहत्वेन, स यशस्वी नरोत्तमः ॥५६॥

यस्तु लब्धैकलोभेन, कार्यकारी स मध्यमः। लब्धं प्राश्य पुनः कार्यं, न करोति महाऽधमः॥५७॥ एकेऽप्येवंविधाः सन्ति, जननी-दोषदायिनः। परेषां लब्धमादाय, घ्नन्ति कार्याणि निष्ठुराः ॥५८॥ सङ्ग्रामो नवनीरदश्च सदृशावेतौ सुपुण्योन्नतौ, लोके जीवनदौ च निःस्पृहतया नित्योपकारप्रियौ। तद्युक्तं परतापखण्डनमहापाण्डित्यवादस्तयोरेकस्त्यागपरः प्रसन्नवदनश्चित्तस्तथा नापरः॥५९॥ स कथं कथ्यते सद्भिर्नीतिशास्त्रैककोविदः। वैरिणं विश्वसेद्यस्तु, विषवैश्वानरोपमम् ? ॥६०॥ दुर्जनोक्तानि वाक्यानि, प्रियाणि मधुराण्यपि। अकालकुसुमानीव, विरुद्धं सूचयन्ति हि ॥६१॥ अमर्षलोभमोहाद्यैः, सभायां न्यायमन्यथा। ब्रूते यस्तन्मुखं दृष्ट्वा, नरं सूर्यं विलोकयेत् ॥६२॥ नृपमानाभिमानी यो, वैरकारी समंततः। यदि राजकुमारोऽपि, नरः शीघ्रं विनश्यति ॥६३॥

अथाधिकारिणः—धनोत्पत्तिमनालोच्य, योऽधिकारी भवेन्नरः। व्ययकर्तुर्विनाऽऽयं वा, तस्य स्वप्नेऽपि नो सुखम् ॥६४॥ नृपाधिकारो नृपतेर्नियोगेषु च वैरकृत्। स यथा मकरद्वेषी, जलावासी विनश्यति॥६५॥ व्यापारी गणनालेख्ये, शुद्धतां न करोति यः। बन्धनं प्राप्नुयात् सोऽपि, कोशकीट इवात्मना ॥६६॥ स्वसेवाऽवसरे राजनिकटं नित्यमावसेत्। वेष्टयन्ति समीपस्थं, प्रायो वल्लीनृपस्त्रियः ॥६७॥ विनाऽवसरमन्तर्यो, याति भूपतिमन्दिरे। स करोत्यरुचिं धृष्टो, वसन्तर्त्तौ गुडो यथा ॥६८॥ पार्थिवे मित्रता नास्ति, निर्दये नास्ति धर्मता। सलोभे गौरवं नास्ति, सङ्ग्रामे चास्ति तत्त्रयम्॥६९॥ सहात्मकर्ममर्म्मज्ञैर्विरोधं प्रकरोति यः। स वृक्ष-शाखामारुह्य, तामेवाधो निकृन्तति ॥७०॥

अथ प्रजासेवकाश्च—राजा नेता न चेत् सम्यक्, तत्प्रजाऽन्यैः प्रपीड्यते। अकर्णधारा पवनैर्नौरिवाम्भोधिमध्यगा ॥७१॥ प्रजा स्वजनयित्री यद्राज्ये दुःखसमाकुला। तस्य धिग् जीवितं राज्ञो, न मोक्षारेऽप्यघं महत्॥७२॥ यस्मिन् राज्ये प्रजापीडा, कलहो

यत्र मन्दिरे। न तद्राज्यं न तद्वेश्म, वने वासो वरं ततः ॥७३॥ त्यजेद्राजानमत्युग्रं, कृतघ्नं कृपणं तथा। कार्पण्यादविशेषज्ञं, दुर्जनाधिष्ठिताङ्गणम् ॥७४॥ राजा दुष्टः सुतो मूर्खो, दुश्चरित्रवती प्रिया। बान्धवैर्वैरमत्युग्रं, हृदि शल्यचतुष्टयम् ॥७५॥ राज्ञो निन्दापरो नित्यं, परोक्षे मन्त्रिणस्तथा। स केवलं विषं प्राश्य, जीविताशां करोत्यपि ॥७६॥ महिषी राजमाता च, प्रतीहारः पुरोहितः। मुख्यो मन्त्री कुमारश्च, षड् मान्या नृपवत् सदा ॥७७॥ दूरतो निष्फला सेवा, निकटाऽतिविनाशिनी। युक्ता मध्यस्थतः ह्यस्मिन्, राज्ञि वह्नौ गुरौ स्त्रियाम् ॥ ७८ ॥ धातुवादकुवाणिज्यद्यूतदुर्नृपसेवया। समृद्धये करोत्याशां, वाहना(वहन्ना)शां समृद्धये ॥७९॥ न वाच्यं कुपिते राज्ञि, हितं वाऽप्यहितं वचः। शीतमप्यम्बु दोषाय, नराणां तरुणज्वरे ॥८०॥ सुभटः स्वामिनं मुक्त्वा, सङ्ग्रामाङ्गणमाश्रितम्। पलायनपरो भीरुर्नरकं याति निश्चितम् ॥८१॥ स्वामिनोऽर्थे गतप्राणास्तस्य किञ्चिन्न साहसम्। तत् साहसं रणाद् भ्रष्टो, निर्लज्जः शूरसंसदि ॥८२॥ सङ्ग्रामाद्विमुखस्यास्य, रौरवं तच्च तिष्ठतु। तत्पत्नी स्वं मुखं नैव, सखीनां दर्शयत्यपि ॥८३॥

अथ सर्वोपदेशः—न सभासु वदेत् प्राज्ञः, परमर्माणि कर्हिचित्। वञ्चनं स्वापमानं च, गोप्यं नैव प्रकाशयेत् ॥८४॥ तृतीयो न भवेद्यस्तु, द्वयोर्मन्त्रं प्रकुर्वतोः। यथावसरवक्ता च, स विद्वान् स विचक्षणः॥८५॥ न मन्यते गुरोः शिक्षां, शीर्णागारं निसेवते। नीचसङ्गप्रसक्तो यस्तस्य न स्यात् सुखं क्वचित् ॥८६॥ अवाह्यवाहनान्नूनमभक्ष्यस्य च भक्षणात्। अकरप्रार्थनात् पुंसां, पौतकं स्यात् पदे पदे ॥८७॥ शत्रोश्च सुहृदो वाऽपि, गुणिनो निर्गुणस्य वा। केषामपि न कर्त्तव्या, निन्दा दौर्भाग्यदायिनी ॥ ८८ ॥ यः सौभाग्यं सार्वजन्यमीहते पुरुषोत्तमः। सर्वेषां तेन कर्त्तव्यं, परोक्षे गुणकीर्त्तनम् ॥८९॥ मानं विहाय वाल्लभ्यं, याति दौर्भाग्यमन्यथा। कृच्छ्रात् (स्वांत)करो मानी, हेलया सुभगो नरः ॥९०॥

अथ राजवाहनाश्वलक्षणम्—तुरङ्गाः शतशो राज्ञा, पालनीयाश्च सिन्धुजाः। पूर्वोक्तं श्रूयते वाक्यं, यस्याश्वास्तस्य मेदिनी ॥९१॥ निर्मांसो वदने प्रोथे, चलः स्कन्धेऽतिबन्धुरः। विशालोरस्कतायुक्तो, लघुः स्यात् कर्णयोर्द्वयोः ॥९२॥ नेत्रे विशाले मणिवद्दीप्यमानातिनिर्मले। मध्ये परिमितः पीनः, पश्चात् पार्श्वे द्वयोरपि ॥९५॥ स्निग्धरोमोद्गमः पृष्ठे, विशालो वायुवेगजित्। आवर्त्तैश्च शुभैर्युक्तो, निन्दितैश्च विवर्जितः ॥९४॥ इत्यादिशालिहोत्रोक्तैर्लक्षणैर्लक्षितः शुभैः। वाहितः सततं चारु, गतिभिर्विद्भिर्भटैस्तु यः ॥९५॥ सबलस्तरुणः शूरः, शुद्धवंशसमुद्भवः। राजवाहनयोग्योऽसौ, मन्दुरामण्डनं हयः ॥९६॥

अथ राजलक्षणम्—अश्वानां पट्सहस्री यद्भटानामयुतं तथा। करोति नृपतेः कार्यं, तदेकोऽपि मतंगजः ॥९७॥ भद्रो मन्दो मृगश्चापि, सङ्कीर्णश्चेति जातयः। गजानां पालकाप्येन, चतस्रः परिकीर्तिताः ॥९८॥ सुन्दरावयवैर्युक्ता, नात्युच्चा नातिवामनाः। न स्थूला न कृशाश्चापि, समगात्रविराजिताः ॥९९॥ मधुसन्निभदन्ताश्च, पृष्ठवंशे धनुःसमाः। वराहतुल्यजघना, गजाः स्युर्भद्रजातिजाः॥१००॥ कक्षा वक्षोऽथ वलयः, श्लथा लम्बे गलोदरे। कुक्षिः स्थूला च सैंहीव, दृष्टिः स्यान्मन्ददन्तिनः॥१०१॥ हस्ताङ्घ्रिद्विजकर्णेषु, सकण्ठेषु तनुश्च यः। मेण्ढ्रबालाधरे ह्रस्वः, स्थूलनेत्रो मृगः करी ॥१०२॥ परिणाहोच्चदैर्घ्येषु, वसुबाणनगैः करैः। मृगो गजः स्याद्धस्तैकद्विवृद्ध्या मन्दभद्रकौ ॥१०३॥ चिह्नैः प्रत्यङ्गकथितैर्भद्रादीनां विमिश्रितैः। दैर्घ्यादिमानैरमितः, प्रोक्तः सङ्कीर्णवारणः ॥१०४॥ शूरो धीरः सुगतिमान्, भद्रजातिसमुद्भवः। मतंगजो हि मन्द्रस्य, वाहनार्थे प्रशस्यते ॥१०५॥ नदद्विजयदुन्दुभिप्रवरतूर्यतालव्रजैः; स्फुरद्विविधनर्त्तनप्रसमितत्रिलोकीश्रमा। सुवंशनृपमांश्रिना विमलकीर्त्तिमन्नर्त्तकी. सदैव विलसत्यहो जयतरङ्गरङ्गांगणे ॥ १०६ ॥ गौराभाति च यस्य गौरवगुणैर्विश्वम्भरेवापरा, रत्नालङ्कृतिसोज्ज्वलाऽखिलपरस्त्रीसोदरस्य प्रिया। शृङ्गादिरसेन

कान्तसुभगा सङ्ग्रामसिंहस्य तत्प्रोक्ते बुद्धिसुधाम्बुधौ नयतरङ्गोऽयं द्वितीयोऽभवत् ॥ १०७ ॥ इति श्रीसङ्ग्रामसिंहविरचिते बुद्धिसागरे द्वितीयो नयतरङ्गः ॥

सङ्ग्रामसिंहोक्तसुवृत्तशोभिवचःकदम्बश्रवणान्नराणाम्। धर्मार्थयुक्तागमनयुक्तिभाजां, न जायते कुव्यवहारबुद्धिः॥१॥ सद्धर्मशास्त्रार्थविवेकवद्भिः, समं सभामद्भिरपापबुद्ध्या। निर्णीय सम्यग्वदतो नृपेण, वाच्यस्तु लोकव्यवहार एषः॥२॥ कलौ नृपा लोभनिविष्टचित्ताः, सभ्याश्च लंचोल्लसदग्रहस्ताः। असत्यदम्भप्रवणाश्च लोका, गतं ततः सद्व्यवहारवृत्त्या॥३॥ विलोक्य लोकान् व्यवहारहीनान्, सङ्ग्रामसिंहः सततं दयालुः। साधारणं सर्वजनानुकूलं, प्रवक्ति किञ्चिद् व्यवहारवाक्यम्॥४॥ भवेद्गृहस्थः सततं, नरः सद्व्यवहारवान्। चतुर्वर्गफलं तस्य, करस्थमिव लक्ष्यते॥५॥ गुरौ देवे च दैवज्ञे, तीर्थे चैव भिषग्वरे। यथा भवति विश्वासस्तथा फलमवाप्नुयात्॥६॥ आचारे व्यवहारे च, व्यवसाये सभासु च। सत्येनापि न कुर्वीत, शपथं गौरवापहम्॥७॥ कुर्वन् कुव्यवहारं यो, दृष्टः पूर्वं पतन्नधः। पुनस्तेन न कर्त्तव्यो, व्यवहारः सुधीमता॥८॥ महता तद्वचो वाच्यं, शक्यते कर्तुमेव यत्। नावर्षन् जलदो जातु, दर्शयत्युत्तरोन्नतिम्॥९॥ देशकालप्रभावानां, तत्त्वं विज्ञाय सर्वदा। योजनीयानि कार्याणि, सर्वाण्यपि सुबुद्धिभिः॥१०॥ न दानेन विना कीर्त्तिर्न दानं कमलां विना। न सा लक्ष्मीर्विना पुण्यं, न पुण्यं हि दयां विना॥११॥ कुरूपस्याप्यशीलस्य, धनिनो हीनजन्मनः। गौरवं दृश्यते लोके, तस्माद्धनमुपार्जयेत्॥१२॥ निर्गुणोऽप्येष गुणवान्निष्कलङ्कः कलङ्क्यपि। नीचोऽप्युच्चासने सर्वैः, स्थाप्यते धनवान्नरः॥१३॥ गृहे भवति चेद् भूरि, धनं स्वायत्तमर्जितम्। न दीयते च सत्पात्रे, पश्चात्तापाय तद्भवेत्॥१४॥ श्रुत्वा सदुपदेशान् सत्पात्रे क्षेपो धने हितः। निक्षिप्य भूमौ पात्रेण, स मूढैरन्यथा कृतः॥१५॥ धरणीतलनिक्षिप्तधनेनान्ते सुखं यदि। तदा वन्ध्या-

सुतोऽपि स्यात्, सुखी स्वकुसुमैर्जितः ॥१६॥ स्तावं स्तावं कदर्थित्वं, प्रापितायार्थिने धनी । ददाति दानं तेनासौ, तत्पापान्नैव मुच्यते ॥१७॥ प्रशंसार्थं हि दातारः, कति नो सन्ति भूतले ? । परलोकहितार्थाय, द्वित्राः सन्ति न सन्ति वा ॥१८॥ प्रस्तावसदृशं दानं, दत्त्वाऽर्थिभ्यः सभासु यः। अनुतापकरः पश्चात्तद्धर्ममपि नाशयेत् ॥१९॥ न येनाकारि विद्येयं, जिह्वाप्राङ्गणनर्त्तकी। सभायां स कथं वाक्यं (ब्रूयाद्) वाचांपतिर्यथा ॥२०॥ कीर्त्तिं लक्ष्मीं धृतिं रूपमारोग्यं बुद्धिवैभवम्। कल्पवल्लीव विद्या सा, सन्तुष्टा किं न यच्छति ? ॥२१॥ कृपणः पूर्णवित्तश्चेद्विद्यावान् गर्वपर्वतः। अहो चित्रं महद् दृष्टं, पानीयादग्निरुत्थितः ॥२२॥ अविज्ञातगृहे यानमज्ञातफल-भक्षणम्। अज्ञातौषधसेवा च, न कार्या कुशलेप्सुभिः ॥ २३ ॥ देशान्तरगतैः सद्भिर्व्यवसायहितेप्सुभिः। शुल्कभीत्या कुमार्गेण, न गन्तव्यं कदाचन ॥२४॥ शास्तारो बहवो यत्र, यत्र राजा च बालकः। तद्राष्ट्रं चतुरैस्त्याज्यं, स्त्रीप्रधानमराजकम् ॥२५॥ यस्य न ज्ञायते वित्तं, कुलं धर्मः सुशीलता। तेन मैत्री विवाहश्च, न कार्यः सुखमिच्छता ॥२६॥ समये व्यवसायस्तु, कृतः स्याल्लाभदायकः। पर्वतीर्थादिसंयोगे, दत्तं बहुफलं यथा ॥२७॥ आपत्स्वनृतं वाच्यं, कातरैर्न कदाचन। सत्येनैवापदं तीर्णा, हरिश्चन्द्रादयो नृपाः ॥२८॥ प्रहरेत् सर्वथा स्त्रीषु, कदाचिन्नातिकोपतः। विशेषाद्बालयुक्तासु, सगर्भास्वातुरासु च ॥२९॥ वैरिणामपि भूपालपुरो मर्म-प्रकाशनम्। अयशस्करमेतद्धि, न विधेयं मनीषिभिः ॥३०॥ कार्यस्तु सततं मद्भिर्वेषो वित्तानुसारतः। प्रभूतेऽपि धने धीरैर्न प्रभोर-धिकः क्वचित् ॥३१॥ अविमृश्यात्मनः सारं, राजमान्यैः समं कलिम्। यः करोति विनाशाय, स्वस्य बन्धुजनस्य च ॥३२॥ प्रभावमा-त्मनो यस्तु, न वेत्ति धनगर्वतः। स नरः सुधिया नैव, प्रार्थनीयः कथंचन ॥३३॥ मोघाऽपि प्रार्थना श्रेष्ठा, गुणाधिकतरे नरे। खरा-रोहणतः श्रेष्ठं, पतनं तुरगादधः॥३४॥ ऋणं कृत्वा व्ययं कुर्वन्, पुरः सौख्यं न विंदति। निजवित्तानुमानेन, व्यवसायात् सुखीभवेत्

॥३५॥ व्याधिर्वैश्वानरो वादो, व्यसनं वैरमेव च। महानर्थकरा ह्येते, वर्द्धिताः पञ्च विश्रुताः॥३६॥ कृतघ्नाः स्वामिहन्तारो, ये च
विश्वासघातकाः। विनिन्दिता नराश्चैते, महापातकिभिः समाः॥३७॥ असम्भाष्या भवन्त्येते, दर्शनात् पापकारिणः। व्यवहाराधिका-
रेषु, कथमेषां हि योग्यता ? ॥३८॥ युग्मम् ॥ गुरुदेवाग्नितश्चोर्ध्वं, वापीकूपादिसन्निधौ। न स्वपेत् कामकायाङ्गी, विनग्नो न जला-
द्र्पात् ॥३९॥ यः परस्याधमर्णोऽपि, स्वोत्तमर्णत्ववाञ्छया। दद्याद्वित्तं कुशीदेन, बहुनाऽपि स मूर्खराट् ॥४०॥ धीरः साहसिको
मानी, बलवानुद्यमप्रियः। यः पराक्रमशीलश्च, तस्माद्देवोऽपि शङ्कते ॥४१॥ अतिस्नेहो न कर्त्तव्यः, क्रोधो वाऽपि पदे पदे। कलहं
वर्धयेन्नैतत्, प्रान्ते दुःखकरं त्रयम् ॥४१॥ विद्वद्गोष्ठ्या सरसया, सङ्गीतैश्च सुभाषितैः। मधुरैर्वल्लभालापैर्भाग्यवान् गमयत्यहः॥४२॥
द्यूतादिव्यसनेनैव, निन्दया निद्रया तथा। नीचैः समं सदालापैः, पापीयान् गमयत्यहः॥४३॥ भ्रातृव्यं भ्रातरं पत्न्याः, स्वस्रीयं च
स्वसुः पतिम्। बन्दिनं देवलं त्यक्त्वा, व्यवहारं समाचरेत् ॥४४॥ नात्यन्तं विश्वसेत् स्त्रीषु, नरः पुण्यवतीष्वपि। प्रायो मूढस्वभा-
वास्ताः, स्त्रियः स्युः पापबुद्धयः॥४५॥ विरक्तां वनितां मूढो, विश्वसेत् काममोहितः। सोऽचिरान्नाशमायाति, यथा राजा विदूरथः
॥४६॥ भर्तृभक्तिं परित्यज्य, व्रततीर्थादिशीलनम्। प्रोषिते चातुरे पत्यौ, सादरत्वमलङ्कृतौ ॥ ४७ ॥ नित्यं परगृहे यानं, प्रासादे
जागरोत्सवे। मातृगेहे सभायां च, न योग्यं हि कुलस्त्रियः॥४८॥ अश्लीलामितवक्तृत्वमशुचित्वं कुशीलता। नित्यं कलहकारित्वं,
स्त्रियो दौर्भाग्यकारणम् ॥४९॥ सीतेव प्रियविप्रियं न कुरुते हंसीव पक्षद्वयं, शुद्धं व्यातनुते पृथ्वेव सततं या पुत्ररत्नप्रसूः। नित्यं
सर्वकुटुम्बभारवहने सर्वसहेव क्षमा, कान्ता मन्दिरमण्डनं सुकृतिनः सा देहिनीवेन्दिरा॥५०॥ यस्य स्त्रीरत्नभोगोऽस्ति, स निःस्वोऽपि
महीपतिः। सुभोज्यं वनितारत्नं, राज्यसारं विदुर्बुधाः॥५१॥ श्रुतं दृष्टं स्मृतं चापि, मनःप्रल्हाददायकम्। त्रिवर्गफलदं नान्यद्रत्नं

स्त्रीभ्यो हि दृश्यते ॥५२॥ व्यापारकोटिभारेण, श्रान्तानां गृहमेधिनाम्। साम्प्रतं दृश्यते किञ्चिद्, वल्लभालोकने सुखम् ॥ ५३॥
पृथ्वीलाभे पुरं सारं, पुरे गेहो गृहे तथा। एकदेशश्च तत्रापि, शय्या च शयनेऽङ्गना ॥५४॥ चञ्चचन्द्रमरीचिभिर्धवलिते प्रोत्तुङ्गसौध-
स्थले,जातीचम्पकमल्लिकापरिमलोद्भ्रान्तद्विरेफाकुले। श्रीमच्चन्दनशैलसम्भवमरुत्संवीज्यमाने लसत्पर्यङ्के सुकृतीह कोऽपि रमते श्या-
मासमालिङ्गितः॥५५॥ जिनपृष्ठे हरेर्वामभागे दृष्टौ पिनाकिनः। ब्रह्मणो दक्षिणाङ्गे च, न गेहं कारयेद्बुधः॥५६॥ समीपे राजगेहस्य,
हिंस्रकारुकर्मन्निधौ। कुप्रातिवेश्मके स्थाने, श्मशाने च न संवसेत् ॥५७॥ खनित्वा करमात्रं हि, भुवं तेनैव पूरयेत्। यद्यूनं त्वद-
निष्टं स्यादधिकं तच्छुभं मतम् ॥५८॥ मृदुध्रुवगुरुस्वातिहस्तवासववारुणैः। वास्तुनः सन्निवेशः स्यात्, तत्प्रवेशः करोज्झितैः॥५९॥
ध्वजो १ धूमस्तथा २ सिंहः ३, श्वा ४ वृपश्च ५ खरो ६ गजः ७। काक८श्चेति क्रमेणोक्तं, बुधैरायाष्टकं गृहे ॥६०। आयामविस्त-
राघाते, शेषमायोगजोद्भूते। विषमायाः शुभाः प्रोक्ताः, स्वदिक्स्थाः सर्वगो ध्वजः॥६१॥ तस्मिन् क्षेत्रफलेष्टघ्नभैर्भक्ते शेषऋक्षकम्।
भेऽष्टभक्ते व्ययोऽपि स्याद्. यह्वायं सद्गृहं व्ययात् ॥६२॥ आक्रन्दं विपुलं चैव, षोडशविजयाह्वयम्। गृहनामानि जायन्ते, मन्दि-
रालिन्दभेदतः ॥६५॥ युग्मम् ॥ लग्नास्ता७रि६त्रि३तर्येषु४,जीव१ज्ञा२र्का३ऽऽर्कि४भार्गवाः५। स्थिता यद्गेहनिर्माणे, शताब्दायुर्गृहं
भवेत् ॥६६॥ शुक्रः स्वोच्चगतो जीवो, लग्नगोऽम्बुगतोऽथवा। स्वोच्चगो लाभगो वाऽऽर्किः, प्रारम्भे तद्गृहं स्थिरम् ॥ ६७॥ गुरौ
केन्द्रेऽथवा शुक्रे, क्रूरैः षड्त्र्यायगैस्तथा। शुद्धैः केन्द्रव्ययच्छिद्रैः(त्रैः)स्थिरलग्ने गृहं विशेत् ॥६८॥ इति वास्तुलक्षणं ॥ जगज्जन-
मनोहरं विपुलसारसद्मश्रियं, सदैव सफलोद्यमं सकलसत्कलाकोविदम्। करोति विनयास्पदं वरविवेचनालङ्कृतं, नरं नृपतिवल्लभं व्य-
वहृतिः समासेविता ॥६९॥ गौराभाति च यस्य गौरवगुणैर्विश्वम्भरेवापरा, रत्नालङ्कृतिसोज्ज्वलाऽखिलपरस्त्रीसोदरस्य प्रिया। भृङ्गा-

॥१६॥

रादिरसेन कान्तसुभगा सङ्ग्रामसिंहस्य तत्प्रोक्ते बुद्धिशुभाम्बुधौ व्यवहृतेरूर्म्मिस्तृतीयोऽभवत् ॥७०॥ इति श्रीसङ्ग्रामसिंह-
विरचिते बुद्धिसागरे व्यवहारतरङ्गस्तृतीयः॥
जिनाधिपं सर्वविदं प्रणम्य, सङ्ग्रामसिंहेन परोपकृत्यै। प्रारभ्यते सम्प्रति बुद्धिसिन्धौ, प्रकीर्णकस्तुर्यतरङ्गराजः ॥१॥ सद्वैद्यकार्था-
मृतसङ्गशीतः, सामुद्रिकाद्यर्थवनाधिनागी। ज्योतिष्कलाविद्रुमकुञ्जखञ्जः, सुखाय वस्तुर्यतरङ्गवायुः ॥२॥ दयामूलेन धर्मेण, विना न
स्यात् परं सुखम्। सुखस्थानं शरीरं तद्रक्षणीयं प्रयत्नतः ॥३॥ स प्राप्नोत्यपमृत्युं यो, युक्त्याऽऽत्मानं न रक्षयेत्। दीपो निर्वाणतां
याति, स्नेहपूर्णोऽपि वायुना ॥४॥ शरीरं न विना ज्ञानमात्मनः सुखदुःखयोः। सङ्क्षेपात् कथ्यते तावत्, उ(तस्यो)त्पत्तिर्मयाऽधुना
॥५॥ कर्मणा प्रेरितो जीवः, शुक्रशोणितयोगतः। ऋतौ गर्भाशये प्राप्तो, गर्भः सम्पद्यते तदा ॥६॥ तत्क्षणे द्रवरूपः स्यात्, सप्ता-
हात् कललं भवेत्। पक्षान्ते बुद्बुदाकारं, मासेन कठिनं भवेत् ॥७॥ पेशी मासे द्वितीये स्यादुत्पद्यन्ते ततः परम्। शिरो भुजौ च पादौ
च, तृतीयेऽङ्गानि पञ्च वै ॥८॥ सर्वाङ्गव्यक्तस्तुर्येऽसौ, मासि सञ्जायते ततः। पञ्चमे मासि चैतन्यं, षष्ठे रोमादिकं तथा ॥९॥ सर्वाङ्गप-
रिपूर्णोऽयं, सप्तमे मासि वर्द्धते। सञ्चरत्यष्टमे मासि, त्वस्मिन्नोजस्तथाविधे ॥१०॥ चापल्यादोजस्तस्मिन्, जातः पुत्रो न जीवति।
नवमे मासि गर्भोऽयं, प्रसूत्यै स्यादधोमुखः॥११॥ अनुभूय परं योनिकष्टं जन्म ततः परम्। प्रसूतिसमये जातः, पुत्रः सर्वाङ्गशोभितः
॥१२॥ शुक्रशोणितयोः साम्ये, गर्भे पण्ढः प्रजायते। अधीरः सत्त्वहीनश्च, धर्मकार्यविवर्जितः॥१३॥ वीर्येऽधिके भवेत् पुत्रः, कन्या
रक्तेऽधिके तथा। तस्मात् सेव्यं प्रयत्नेन, वीर्यवृद्धिकरौषधम् ॥१४॥ इति शरीरं॥
वैद्यकसारः—व्याधेः कर्मविपाकोक्तयुक्त्या नाशःक्वचिद् भवेत्। क्वचिद्भेषज्ययोगाच्च, क्वचिद्दुःखानुभूतितः॥१५॥ तस्माच्छरीरे न

हि रोगकारणं, कर्मैव साक्षात्तु निमित्तकारणम् । रसादयस्तेऽसमवायि कारणं, दोपाः प्रदुष्टाः समवायि कारणम् ॥१६॥ स्वस्थेन प्रातरुत्थाय, दन्तधावनपूर्वकम् । ताम्बूलमर्द्दनस्नानसुगन्धाहारसेवनम् ॥१७॥ वृत्तिहीनं पदभ्रष्टं, शोकार्त्तं शरणागतम् । शक्तितस्त्वनुवर्तेत, मानवं व्याधिपीडितम् ॥१८॥ श्मशाने च नदीतीरे,शून्यगेहे चतुष्पथे । देवालये वने रात्रौ, न गच्छेद्रोगभीरुकः॥१९॥ हिताहारविहारेषु, दक्षो नित्यं जितेन्द्रियः । दयाधर्मविवेकज्ञः, स भवेत् सर्वदा सुखी ॥२०॥ वर्षाहिमग्रीष्मचितं विकारं, विशोधयेत् यत्नपरो हिताशी। शरद्वसन्ताभ्रदिनेषु तस्य, न जातु रोगाः प्रभवन्ति तज्ज्ञाः॥२१॥ मधौ मधुरमश्नाति, निदाघे मैथुनप्रियः। पिबेन्नद्यम्बु वर्षासु, दधिभोक्ता शरत्सु च ॥२२॥ हिमागमेऽतिनिद्रालुः, शिशिरे लघुभोजनम् । यः करोति विमूढत्वात् ,स नरो रोगवान् भवेत् ॥२३॥ आरामं जलकेलिं च, हर्म्यं क्षीरं च वल्लभाम् । मिष्टान्नं च भजेत् षट्सु, वसन्तादिष्वनुक्रमात् ॥२४॥ यो भुङ्क्ते मात्रया नित्यं, यथाकालं हिते रतः। दिनचर्यासमुद्दिष्टं, स्वस्थः कुर्वन्न रोगभाक् ॥२५॥ अजीर्णे सति यो भुङ्क्ते, कुपथ्यं कुरुते सदा। तच्छरीरं कथं लोके, भवेद् व्याधिविवर्जितम् ? ॥२६॥ विण्मूत्रनिद्रावमिकासरेतःक्षुत्तृट्श्रमश्वासजवेगरोधात् । भवन्ति रोगा विविधाः शरीरे, वातादयो वैद्यवरैरसाध्याः॥२७॥ यः पूर्वमेकवेगार्त्तो, यदि वेगान्तरं भजेत् । स्वयं दूतो महाव्याधिमाकारयति मृत्यवे ॥२८॥ त्यजेद्विषातुरो निद्रां, ज्वरी च घृतभोजनम् । कर्णरोगी शिरःस्नानं, व्यवायं नेत्ररोगवान् ॥२९॥ त्वग्दोपक्षयकासाक्षिवक्त्ररोगातुरैर्नरैः। संसर्गो नैव कर्त्तव्यो, यतः सञ्चारिणश्च ते ॥३०॥ यदि न स्याद्गृहे वित्तमिच्छेदंगं गदोज्झितम् । निशान्ते स पिबेत्तिस्रः, प्रसृतीः शीतलं पयः ॥३१॥ शीतं सुधोपमं स्वच्छं, सलिलं हृदयप्रियम् । श्रमंमूर्च्छाभ्रमहरं, वर्णदं पित्तनाशनम् ॥३२॥ सदा सर्वेषु भैषज्येष्वशक्तो यः पुमान् भवेत् । भक्षणीया सदा तेन, तोयेनैका हरीतकी ॥३३॥ तीक्ष्णबुद्धिप्रदा स्वर्ग्या, जराव्याधिविनाशिनी ।

हरितकीयं सर्वेषां, मातेव हितकारिणी ॥३४॥ मूर्खदत्तं कुभूमिस्थं, शटितं कृमिभक्षितम्। अविज्ञातं च भैषज्यं, न ग्राह्यं शुभमिच्छता ॥३५॥ भुक्त्यादौ सलिलं पीतं, कार्श्यं मध्ये समानताम्। स्थूलत्वमपि भुक्त्यन्ते, करोति वपुषि ध्रुवम् ॥३६॥ वस्त्रपूतं पिवेत्तोयं, यः श्रीगुरुसुरातिथीन्। अर्चयित्वा सदा भुंक्ते, ततः पाप्मा पलायते ॥३७॥ पवित्रं षड्रसाकीर्णं, सुपक्वं वल्लभाहृतम्। भोजनं जीर्णतामेति, भुक्तं मित्रादिभिः सह ॥३८॥ गव्यं घृतं सत् सलिलं च शीतं, बालाबलाक्षीरसुभोजनं च। स्नानं सुभोज्यं हि यथोक्तकाले, प्रोक्तानि सद् प्राणकराणि सद्यः ॥३९॥ इति वैद्यकसारसङ्ग्रहः ॥

ज्योतिस्सारः-ज्योतिःशास्त्रमनादृत्य, पठन्नन्यच्च वाङ्मयम्। न भाति परिपूर्णाङ्गो, विचक्षुः पुरुषो यथा ॥४०॥ अतस्तत्सारमुद्धृत्य, व्यवहाराय धीमताम्। साधारणं सुसंक्षिप्तं, ज्योतिषं किञ्चिदुच्यते ॥४१॥ नन्दा भद्रा तथा पूर्णा, शुभकार्ये शुभावहाः। सङ्ग्रामादौ जया प्रोक्ता, रिक्ता बन्धवधादिषु ॥४२॥ बुधशुक्रेन्दुजीवानां, वाराः सर्वेषु कर्मसु। शुभङ्कराः परेषां च, स्वोक्तकार्यैकसाधकाः ॥४३॥ शुक्रज्ञाऽऽरशनाद्येषु, नन्दादितिथयः शुभाः। प्रतिपच्चैव सौम्येन, न च सूर्येण सप्तमी ॥४४॥ हस्तो मार्गं च दास्रं च, मैत्रं पुष्यश्च रोहिणी। नागः सूर्यादिवारेषु, योगस्त्वमृतसिद्धिकः ॥४५॥ मघा विशाखा रौद्रं च, मूलमग्निश्च रोहिणी। हस्तः सूर्यादिवारेषु, यमघण्टः क्रमाद् भवेत् ॥४६॥ द्विदैवादिचतुष्केषु, तेषु सूर्यादिसप्तसु। वारेषूत्पातको मृत्युः, काणः सिद्धिः क्रमाद् भवेत् ॥४७॥ वेदपञ्चनवदिक्सङ्ख्ये, विश्वविंशतिसम्मिते। नक्षत्रे सूर्यनक्षत्राद्, रवियोगः शुभो मतः ॥४८॥ ध्रुवमैत्रेन्दुमूलान्त्यस्वातिहस्तमघासु च। विवाहः शुभदो ज्ञेयो, विना लत्तादिदूषणम् ॥४९॥ रेवत्यादितिकर्णेभ्यो, द्वयं हस्तेन्दुमैत्रभम्। प्रयाणे शुभदं प्रोक्तं, त्यक्त्वा तारां विनिन्दिताम् ॥५०॥ आद्यं रात्रिचतुष्टयं निजऋतुभं पौष्णं मघां चाष्टमीं, दर्शं भूततिथिं च पर्वदिवसं त्यक्त्वा च सन्ध्याद्वयम्।

इज्येधीतनुधर्म(मा)गर्भभृगुजे चन्द्रे शुभे कामिनीं, पुत्रार्थी पुरुषः सुहृष्टमनसा सेवेत् समायां निशि ॥५१॥ सर्वाग्निवारुणर्क्षेश्च,युता भद्रा तिथिर्यदा। यदि सौरारयोर्वारस्तदा जाता विषाङ्गना ॥५२॥ मूलादितिस्वातिकरेन्दुराधापौष्णोत्तरावासवरोहिणीषु। पैत्र्याश्विपुष्प-श्रुतिवारुणेषु, सुरप्रतिष्ठा शुभदा च दीक्षा ॥५३॥ सङ्क्रान्त्युभयथा यामद्वये विष्ट्यां न वैधृतौ। व्यतीपाते न गण्डान्ते,यामार्द्धं कार्य-मारभेत् ॥५४॥ शुभकर्म तथा यानं, गृहारम्भादिकं तथा। सितेन्दुजीवे नो कार्यं, बाले वृद्धे तथाऽस्तगे ॥५५॥ प्रासादिसप्तवारेषु, मासि हीनेऽधिके तथा। क्रूरविद्धे क्रूरयुते, भे कार्यं नारभेत् क्वचित् ॥ ५६ ॥ मेषको नक्रकन्याश्च, कर्कमीनतुलावृताः। तुङ्गाः सूर्यादिखेटानामुच्चान्नीचं तु सप्तमम् ॥५७॥ गुरुर्जीवबुधौ काव्यकोविदौ च विभास्कराः। विकुजार्वीद्विनाः सूर्यान्मित्राणि विकुजें-द्विना ॥५८॥ मूर्तौ चन्द्रसितौ धने सुरगुरुर्जीवं विनाऽरित्रिगाः,शुक्रज्ञौ चतुरस्त्रगौ गुरुसितौ धर्मात्मजः स्वौ शुभौ। जीवेन्दू द्युत-गौखगाः शनिरविश्मापुत्रचन्द्रा ग्रहाः, सर्वे लाभगताश्च गोचरविधौ शुक्रः शुभश्चान्त्यगः ॥ ५९ ॥ व्ययाष्टमगताः सौम्याः, सर्व-कार्येषु निन्दिताः। त्रिकोणधनकेन्द्राष्टस्थिताः पापग्रहास्तथा ॥ ६० ॥ त्रिकोण(ध)नस्त्रांशुगाः सकलकार्यसिद्धिप्रदाः, शुभा गगन-गामिनस्त्रिदितगस्त्रिवल्लभगाः। विवाहसमयेऽष्टगौ तरणिसूर्यपुत्रौ शुभौ, शशाङ्कभृगुलग्नपा रिपुगतास्तथा नो हिताः ॥ ६१ ॥ शुभे सकलकर्मणि ज्ञगुरुभार्गवा लग्नगा, दिशन्ति सुखसम्पदो विमलपड्बलैः शालिनः। विलग्नशुभदं सदा खलखगाः सनालोकनैः, शशी निधनगः शुभं न कुरुते कदाचित् ध्रुवम् ॥६२॥ इति ज्योतिःसारसङ्ग्रहः ॥

शकुनसारः—प्रस्थितोऽपि मुहूर्त्तेन, विरुद्धे शकुने स्थिते। पुरो न योग्यं गमनं, तस्माच्छकुनमुच्यते ॥६२॥ सपुत्रा स्त्री सवत्सा गौर्नृपः पाठीनखंजनौ। आमं मांसं ततं तूर्यं, शङ्खभेरी रथध्वनिः ॥४६॥ पूर्णकुम्भः प्रसूनानि, शुक्लाम्बरधरो नरः। मृत्तिकाऽक्षतपात्रं च,

च्छत्रचामरवारणाः ॥६५॥ यायिनोऽभीष्टदा एते, दर्शनाच्छ्रवणादपि । कुरङ्गा दक्षिणाः श्रेष्ठा, यायिनामोजसङ्क्षया ॥६६॥ पिङ्गलौलूककाकाश्च, खरदुर्गादयः पथि । गच्छतो वामतः श्रेष्ठा, विशतो दक्षिणाश्रिताः ॥६७॥ सगर्भा स्त्री रथो भग्नः, कन्या प्रोक्तवयोऽधिका । क यासीति प्रवक्तारो, गमनप्रतिषेधकाः ॥६८॥ हीनाङ्गं कर्दमालिप्तं, व्याधिक्षीणं नराधमम् । दृष्ट्वा सम्मुखमायातं, न गच्छेत् कार्यसिद्धये ॥ ६९ ॥ शकुनसारसङ्ग्रहः॥

**सामुद्रिकसारः**—विनापि जन्मसमयमुदर्कफलसूचकम् । सामुद्रिकं यतस्तस्मात्, तत्सारं किञ्चिदुच्यते ॥७०॥ पाणिपादतले पद्मं, ध्वजो मत्स्यस्तथाऽङ्कुशः । छत्रं वा दृश्यते यस्य, स नरो भूपतिर्भवेत् ॥७१॥ स्वरः सत्त्वं तथा नाभिर्गंभीरं शस्यते त्रयम् । विपुलं च तथा सद्भिर्वक्षोभालकराननम् ॥७२॥ जङ्घाद्वयं तथा पृष्ठं, कण्ठं पुंश्चिह्नमेव च । यस्यैतानि च ह्रस्वानि, स नरो भाग्यवान् भवेत् ॥७३॥ अक्षिणी च भ्रुवोर्मध्यं, स्तनमध्यं तथा हनुः । एतानि यस्य दीर्घाणि, स सदा सेव्यते श्रिया ॥ ७४ ॥ नखताल्वधरापाङ्गजिह्वाकरतलादिषु । रक्तत्वं दृश्यते यस्य, स पुमान् पुरुषोत्तमः ॥७५॥ ताम्बूलापूरितं वक्त्रं, यस्याङ्गं चन्दनार्चितम् । शिरः पुष्पाकराकीर्णं, तं लक्ष्मीः समुपासते ॥७६॥ उभयोः सन्ध्ययोः शेते, बह्वाहारपरस्तु यः । सदाऽति निष्ठुरं ब्रूते, स पुमान् हीयते श्रिया ॥७७॥ तृणच्छेदं नखैर्भूमिलेखनं व्यर्थहास्यताम् । यः करोति नरो मूढः, स दरिद्री सदा भवेत् ॥७८॥

अथ स्त्री—सदाचारपरा नित्यं, सुशीला मितभाषिणी । प्रसन्नवदना साध्वी, सा लक्ष्मी गृहमागता ॥ ७९ ॥ अन्यगेहरता क्रूरा, चपला बहुभाषिणी । साऽऽपद्देहमयी गेहे, वनिता कलहप्रिया ॥८०॥ शरीरं रोमशं यस्याः, निम्नाक्षी ह्रस्वनासिका । श्मश्रुश्यामोन्नतोष्ठी च, वरणीया न कन्यका ॥८१॥ बिम्बाधरा कुरङ्गाक्षी, समावयवराजिता । सौभाग्यलक्षणैर्युक्ता, सा कन्योद्वाहितुं शुभा

॥८२॥ शुभं वचनमर्चितं विमलमानसं प्रोन्नतं, सतां नयनतुष्टिदं सहजसुन्दरं यद्वपुः। मतिः सुकृतशालिनी परगुणानुवादे रतिर्भवेदुपकृतिप्रियः किमपरैः शुभैर्लक्षणैः ? ॥८३॥ इति सामुद्रिकसारसङ्ग्रहः ॥

अथ रत्नपरीक्षा—रत्नशब्दो गुणोत्कर्षाद्युवत्यश्वद्विपादिषु। इह तूपलरत्नानां, किञ्चिल्लक्षणमुच्यते ॥८४॥ बलदैत्याङ्गजातानि, रत्नानि च दधीचितः। भूस्वभावाद्वदन्त्येके, वैचित्र्यमुपलेष्विदम् ॥८५॥ सर्वद्रव्यैरभेद्यं यद्, वज्रं स्निग्धं सुरश्मिवत्। तरत्यप्सु तडिद्वह्निशक्रचापोपमं शुभम् ॥८६॥ वज्रं विलक्षणं सम्पज्जीवितस्वजनक्षयम्। सुलक्षणं करोतीष्टं, विद्युद्विषभयापहम् ॥८७॥ श्वेतं द्विजानां हितकारि वज्रं, रक्तं तथा पीतमिलाधिपानाम्। शिरीषपुष्पद्युतिमद्विशां तच्छितेतरं शूद्रहितं प्रदिष्टम् ॥८८॥

अथ मुक्ता—द्विपाहिशुक्तिशङ्खाभ्रमीनशूकरवेणुतः। मुक्ताफलानि जायन्ते, साम्प्रतं बहु शुक्तिजम् ॥८९॥ इन्द्रद्वीपकुलोद्भूतं, कुम्भिकुम्भोद्भवं च यत्। अनर्घ्यं गुणवत् मुक्ताफलं हि पृथुलं हितम् ॥ ९० ॥ शेषतक्षकयोर्वंश्या नागास्तत्फणमध्यजा। मुक्ता नीलद्युतिः स्निग्धा, वक्ष्येऽतस्तत्परीक्षणम् ॥९१॥ भाजने सुप्रदेशस्थे, राजते मौक्तिकं स्थितम्। तद् दृष्ट्वा स्याद्यदा वृष्टिरकस्मात् ज्ञेयमौरगम् ॥९२॥ भौजंगं मौक्तिकं राज्ञां, धृतं शत्रून्निकृन्तति। यशो विकाशयत्याशु, श्रियं मातङ्गशालिनम् ॥९३॥ शङ्खोद्भवं सुवृत्तं स्याद्, भ्राजिष्णु शशिकान्तिमत्। जातं करकवन्मेघसम्भूतं हि तडित्प्रभम् ॥९४॥ पवित्रं तिमिजं मत्स्याक्षिप्रभं च गुणोत्तरम्। पितृदेवादिकार्येषु, शस्तं सर्वजनप्रियम् ॥९५॥ दंष्ट्रामूले वराहाणां, जातं सर्वगुणास्पदम्। वाराहं बहुमूल्यं स्याच्चन्द्रकान्तिसमप्रभम् ॥९६॥ पर्वण्यष्टोत्तरशते, महद्वंशस्य जायते। कर्पूरस्फटिकप्रख्यं, चिपिटं वेणुजं हि तत् ॥९७॥ शङ्खवेणुसाहे(शूकरे)भनागाभ्रतिमिसम्भवाः। गुणाधिकतया तज्ज्ञैरवेध्या मौक्तिकाः स्मृताः ॥९८॥ श्यामं वैष्णवमिन्द्रदैवतमिदं चन्द्रप्रभाभासुरं, पीतं वारुणमंजनेन सदृशं

याम्यं च मुक्ताफलम् । गुञ्जादाडिमबीजताम्रमिति यत् प्रोक्तं मरुद्दैवतं, निर्धूमानलसन्निभं तु चतुरैराग्नेयमित्युच्यते ॥९९॥

अथ पद्मरागादयः—प्रायो हि मणयः सर्वे, पद्मरागादयो हिताः । स्वच्छाः स्निग्धप्रभा ज्योतिष्मन्तो रागविराजिताः॥१००॥ अमनोज्ञश्च दुर्विद्धो, लेखाकीर्णः सशर्करः । कलुषो मन्दकान्तिश्च, मणिः सर्वोऽपि गर्हितः ॥१०१॥

अथ नागमणिः—शिखिकण्ठालिवर्णो यो, दीप्रदीपशिखाप्रभः । दृश्यते मूर्ध्नि नागानामनर्घ्यो मणिरुत्तमः॥१०२॥ बिभर्त्ति धरणीधवो मणिमहर्घ्यमेनं सदा, भवंति खलु तस्य नो रिपुविषाग्निदोषाः क्वचित् । न तस्य विषये कदाचिदपि सम्भवन्तीतयो, जयेत् स जगतीतलं ननु मणेः प्रभावादपि ॥३॥

अथ वैराग्यं:—दृढं बद्धा पाशैर्विविधकृतकर्मप्रणिहितैर्न जानन्तस्तत्त्वं किमपि परमानन्दविषयम् । धनं पुत्राः स्त्री चेत्यहतममता मन्दमतयो, भवाम्भोधौ मज्जन्त्यहह विहताः प्राणिन इमे ॥४॥ एके च रोगैः परिभूतदेहा, विहाय बन्धून् यमसद्म यान्ति । वाञ्छन्ति चान्ये स्थिरतां पुनर्यज्जगत्यहो मोहबलं महीयः ॥५॥ रक्तमांसविलिप्तानि, चर्मणा वेष्टितान्यपि । अस्थीनि स्नायुनद्धानि, शरीरमिह कथ्यते ॥६॥ तत् प्रत्यङ्गं मलाकीर्णमतिदुर्गन्धिमजडम् । व्याधिशोकबहुक्लेशममतामन्दिरं महत् ॥ ७ ॥ गर्भे जरायुनिर्बन्धसङ्कटे पतितस्य वै । दुःखं संजायते जन्तोर्दुःसहं दशमासनम्॥८॥ बाल्ये ततः पूतिगन्धिमललिप्ताङ्गकः सदा । व्याधिभिः परिभूतश्च, सदुःखीत्यनिशं शिशुः ॥ ९ ॥ सम्पुष्टसर्वावयवः, कन्दर्पकलितान्तरः । धनयौवनगर्वेण, नित्यं माद्यति मन्दधीः ॥१०॥ अस्थिरं यौवनं प्राप्य, परस्त्रीरागरञ्जितः । धनं विपुलमासाद्य, विकर्मशतमाचरेत् ॥११॥ मुखं लालाभिराकीर्णं, जराजर्जरितं वपुः। परिक्षीण.खिलाङ्गस्य, तृष्णैका परिवर्द्धते ॥१२॥ तस्माच्च राज्ञः सन्मानं, शरीरं यौवनं धनम् । अनित्यमिव पश्येत, श्रीसङ्ग्रामोपदे-

शतः ॥१३॥ इति मत्वा च सर्वज्ञः, परमात्मा परः पुमान्। वीतरागश्चिरं ध्येयः, संसारतरणेप्सुभिः ॥१४॥ योगीन्द्रध्यानगम्यो यः, करुणासिन्धुरव्ययः। मुमुक्षुभिर्यथा ध्येयस्तद् ध्यानमधुनोच्यते॥१५॥ पिण्डस्थं च पदस्थं च, रूपस्थं च सुसिद्धिदम्। रूपातीतमिति ध्यानं, चतुर्द्धोक्तं मनीषिभिः ॥१६॥ अन्तःकरणसंस्थं यच्छरीरे निश्चलं भवेत्। तन्मयत्वादिशुद्धं तत्, पिण्डस्थं ध्यानमुच्यते ॥१७॥ महामन्त्रे च मन्त्रे च, मालामन्त्रेऽथवा स्तुतौ। सम्यादिलब्धमन्त्रे वा, पदस्थं ध्यानमुच्यते ॥१८॥ मूर्त्तिस्वरूपमालम्ब्य, मनोज्ञमविकारकम्। यथात्रस्थितरूपेण, ध्यानं रूपस्थितं हि तत् ॥१९॥ निर्गुणानन्दतत्त्वस्याव्यक्तस्य परमात्मनः। अलक्ष्यस्यैव यद्ध्यानं, रूपातीतं तदुच्यते ॥२०॥ निशीथे यस्तु जागर्त्ति, मितं वक्ति जितेन्द्रियः। अल्पं मधुरमश्नाति, स योगी सिद्धिमाप्नुयात् ॥२१॥ श्रुते तत्त्वेऽप्यनभ्यासो, बहुनिद्रालुता भ्रमः। जनेऽरतिः कामगोष्ठी, योगिनो नाशहेतवः॥२२॥ योगश्चतुर्विधो मन्त्र १ लय २ राज३-हठा४ मिथः। सिध्यत्यभ्यासयोगेन, सद्गुरोरुपदेशतः ॥ २३ ॥ पद्मासनाद्यासनेषु, संस्थितः प्राणरोधकृत्। यथोक्तं ध्यानमास्थाय, समाधिं परमं विशेत् ॥२४॥ महामन्त्रादिकं मन्त्रं, जपन्नेकाग्रमानसः। मन्त्रादेवाप्नुयात् सिद्धिं, मन्त्रयोगस्ततो मतः ॥ २५ ॥ अथ लययोगः॥ द्वैपायनादियोगीन्द्रैः, साधितोऽयं महात्मभि। लययोगः शुभः गोप्यो, नवचक्रलयात्मकः॥२६॥ कन्दाख्यं प्रथमं चक्रमाधारे लिङ्गमूलके। स्वाधिष्ठानं द्वितीयं स्यान्नाभिचक्रं तृतीयकम् ॥ २७ ॥ चतुर्थं हृद्गतं कण्ठे, पञ्चमं तालुगं ततः। षष्ठं भ्रूमध्यदेशस्थं, भ्रूचक्रं सप्तमं विदुः ॥२८॥ ब्रह्मरन्ध्रेऽष्टमं चक्रं, व्योमाख्यं नवमं ततः। भवेत्पूर्णे गिरौ पीठे, तत्र ध्यात्वा विमुच्यते ॥२९॥अथ राजयोगः॥ पवनोन्मत्तमातङ्गं, जित्वा सद्बुद्धियोगतः। साधितो राजयोगोऽयं, दत्तात्रेयादियोगिभिः ॥ ३० ॥ सद्गुरोः सन्निधौ शुद्धपवनाभ्यासकृच्छुचिः। बिशतंतुनिभां मूलात्, सुप्तां कुण्डलिनीं सुधीः ॥३१॥ बोधितां पवनाघातैः, सुषुम्नान्तः

प्रवेशयेत्। क्रमेण पंच चक्राणि, भेदयित्वोर्ध्वगामिनीम् ॥३२॥ नयेत् कुण्डलिनीं चक्रे, सहस्रदलसञ्ज्ञिते। तत्र पीयूषपूर्णां तां, कृत्वा सिद्धिं परात्रजेत् ॥३३॥ अथ हठयोगः॥ मार्कण्डेयेन चाष्टाङ्गः, षडङ्गस्तदनन्तरम्। गोरक्षप्रमुखैः पूर्वं, साधितोऽयं हठाभिधः ॥३४॥ तस्याङ्गानि यमः १ सम्यग्, नियमो २ ध्यान ३ मासनम् ४। धारणा ५ प्राणसंरोध ६ प्रत्याहार ७ समाधयः ८ ॥३५॥ लक्षणानि यमादीनामन्यशास्त्रप्रयोगतः। विज्ञेयान्यत्र नोक्तानि, ग्रन्थगौरवभीतितः॥३६॥ चतुर्विधस्याप्यङ्गानि, तत्तन्मतविभेदतः। सम्भवन्ति यमादीनि, वसुषड्भेदसङ्ख्यया ॥ ३७ ॥ चतुर्विंशतितीर्थेशा, जम्बूस्वाम्यादयश्च ये। योगैः प्रक्षीणकर्माणः, प्राप्नुयुर्मोक्षमक्षयम् ॥३८॥ इति चतुर्विधो योगः ॥

ढिल्ल्यामल्लावदीने नरपतितिलके राजति क्ष्मामधीशे, सोनीश्रीसाङ्गणाख्यः समभवदुदितश्रीलसत्कीर्त्तिपूरः। तत्पुत्रः पद्मराजः प्रथितगुणगणस्तत्सुतः सूरसंज्ञस्तत्सूनुर्धर्मनामा। तदनु च वरसन्धोऽभवत् सत्यशीलः ॥३९॥ नरदेवधनाख्यौ च,तत्पुत्रौ द्वौ बभूवतुः। ओसवालकुलोत्तंसौ,दीनानाथकृपाकरौ ॥४०॥ चन्द्रपुर्यां धनाख्येन,वितीर्य विपुलं धनम्। मोचिताः शकसङ्घट्टान्नराः शतसहस्रशः॥४१॥ तज्ज्येष्ठो नरदेव एव समभूत् ख्यातः क्षितौ मण्डपे,मन्त्रागारकरः सदोद्यतकरः सत्पात्रदः सर्वदः। हूसङ्गक्षितिपालसंसदि सतां मान्यः परार्थैककृद्भाण्डागारधुरन्धरः स च परस्त्रीसोदरः सुन्दरः॥४२॥ जयत्ययं सम्प्रति तत्तनूजः, सङ्ग्रामसिंहः सततं दयालुः।परोपकारैककरः सुशीलः, सौजन्यसिन्धुर्जिनभक्तियुक्तः॥४३॥ नरदेवजसङ्ग्रामाङ्गणमाश्रित्य मार्गणाः। लब्ध्वा लक्षं पुनः स्थानमायान्ति स्वयमद्भुतम् ॥४४॥ सङ्ग्रामे नरदेवजेऽद्भुतमहो सर्वं दरीदृश्यते, मुख्या यत्र दया परोपकरणं शत्रुत्वनार्त्तापि न। भ्रातृत्वं परसुन्दरीषु परवित्तस्याभिलाषः कुतः ?, कीर्तिश्चन्द्रकरोज्ज्वलाऽत्र विजयः सम्प्राप्यते सर्वदा ॥ ४५ ॥

नखेषुभू १५२०सम्मितविक्रमाब्दे,पञ्चेभरामेन्दु १३८५ मिते च शाके। चैत्रस्य पष्ठ्यां सितपक्षजायां, शुक्रस्य वारे शशिभे गविंदौ ॥४६॥ चापोदये वीर्ययुतश्च खेटैः, श्रीमालवेशे महमूदभूपे। जेतुं महीपालनिजामसाहिं, युद्धेन याते दिशि दक्षिणस्याम् ॥४७॥ लसत्प्रतिस्थानपुरेऽतिरम्ये, गोदावरीतीरतरंगपूते। जिनं प्रणम्येह सुबुद्धिसिन्धुं, सङ्ग्रामसिंहः कुरुते कवीन्द्रः॥४८॥ श्रीमद्दक्षिण-भूपतिं जितवतः कुम्भेभपञ्चाननस्योद्यद्गूर्जरगर्वपर्वतमहत्पक्षच्छिदो ग्राह्यः (वणः) । खल्वीश्रीमहमूदसाहिनृपतेर्विश्वासमुद्राधरः, सङ्ग्रामः स्वकलत्रमित्रविलसत्पुत्रैश्चिरं जीवतु ॥४९॥ गौराभाति च यस्य गौरवगुणैर्विश्वम्भरेवापरा, रत्नालङ्कृतिसोज्ज्वलाऽखिलपरस्त्री-सोदरस्य प्रिया। शृङ्गारादिरसेन कान्तसुभगा सङ्ग्रामसिंहस्य तत्प्रोक्ते बुद्धिनिधौ प्रकीर्णकतरङ्गोऽयं चतुर्थोऽभवत् ॥५०॥

इति श्रीओसवंशावतंसेन सर्वजीवदयापरेण श्रीसङ्ग्रामसिंहेन विरचिते
बुद्धिसागरे चतुर्थः प्रकीर्णकतरङ्गः ॥